# आश्रयाष्टकम्

{॥ आश्रयाष्टकम् ॥}

गिरिचरं करुणामृत सागरं

परिचरं परमं मृगयापरम् ।

सुरुचिरं सुचराचरगोचरं

हरिहरात्मजमीश्वरमाश्रये ॥ १

प्रणतसञ्चयचिन्तित कल्पकं

प्रणतमादिगुरुं सुरशिल्पकम् ।

प्रणवरञ्जित मञ्जुळतल्पकं

हरिहरात्मजमीश्वरमाश्रये ॥ २

अरिसरोरुहशंखगदाधरं

परिघमुद्गरबाणधनुर्धरम् ।

क्षुरिक तोमर शक्तिलसत्करं

हरिहरात्मजमीश्वरमाश्रये ॥ ३

विमलमानस सारसभास्करं

विपुलवेत्रधरं प्रयशस्करम् ।

विमतखण्डन चण्डधनुष्करं

हरिहरात्मजमीश्वरमाश्रये ॥ ४

सकललोक नमस्कृत पादुकं
सकृदुपासक सज्जनमोदकम् ।
सुकृतभक्तजनावन दीक्षकं
हरिहरात्मजमीश्वरमाश्रये ॥ ५

शरणकीर्तन भक्तपरायणं
चरणवारिधरात्मरसायनम् ।
वरकरात्तविभूति विभूषणं
हरिहरात्मजमीश्वरमाश्रये ॥ ६

मृगमदाङ्गित सत्तिलकोज्वलं
मृगगणाकलितं मृगयाकुलम् ।
मृगवरासनमद्भुत दर्शनं
हरिहरात्मजमीश्वरमाश्रये ॥ ७

गुरुवरं करुणामृत लोचनं
निरुपमं निखिलामयमोचनम् ।
पुरुसुखप्रदमात्मनिदर्शनं
हरिहरात्मजमीश्वरमाश्रये ॥ ८

आश्रयाष्टकं सम्पूर्णम् ॥

